④ विषय - व्याकरण
पेज - 1
- 30 × 13 × 0.1 c.m.

त्कट सुं लिजनिशाने धातोर्दीर्घोनिपातनात

... ... ...

मेदिनीकुशली छेदनेन्स: प्रत्ययोनिपातनात

⑤ गयातीर्थ
पेज = 1
= 28 × 13 × 0.1 C.m.

श्री गणेशायनमः श्री सनत्कुमारउवाच

... ... ... ...

गयानाम्ना गया स्थानं नक्षत्रं ब्रह्मर्षिकोऽर्षि

कोऽसातीपितरः

स्वमित्रक्षैर्नराधिपः त्रिभिर्नीचैर्भवेदास्त्रिभिरस्तगतैर्यवः २३ उदितः स्व

गृहस्थस्वमित्रगेहस्थितापिवा मित्रवर्गेणदृष्टस्वसद्ग्रहः सवलस्थताः

२४ दशमेवुधः सूर्यौचभौमेराहौचषष्ठगौ रायपोगेत्रयोयातः स

उमान्नापकोभवेत् २५ स्वामिनावलिनादृष्टेः सवलैश्चशुभग्रहैः नदृष्टो

नयुतःपापैः सलग्नसवलस्थतः २६ आदौजीवःस्थानिभ्यातेग्रहामघे

निरंतरं राजयोगंविजानियाकुड्ढवलसंयुतं २७ सहजस्थ्यायदाजीवो

मन्त्युस्थानेजदासितः निरंतरग्रहामध्येराजाभवतिनिश्चितं २८ जी

वोवृषेहधारस्मिन्मिथुनेमकरेकुजः सिंहेभवतिसौरिश्चयात् कंन्यायां

बुधभास्करौ २९ तुलायामसुराचार्ये राजयोगोभवेदयंमत्रयोगे

समुत्पन्नामहारायोभवेन्नरः ३० अथमेघादयोवर्षेजदिजीवतिमानवः

ल० २

चंद्रः सर्वभौमस्तदा राजा जायते विश्वपालकः ३१ केंद्रजीवोऽजदालग्ने सर्वे योगास्तदा शुभाः दीर्घजीवी महाभाग्यो जातको नायको भवेत् ३२ धने शुक्रः पापभौमपापमीने जीवस्तुले बुधः नीचस्थौ पापि चंद्रौ च राजयोगो विधीयते ३३ अस्मिन्योगे च यो जातः स राजा धनवर्जिताः दाता भोक्ता च विख्यातो मान्यो मंडलेनायकः ३४ मीने शुक्रो बुधश्चापां तेऽधने राहुस्तनौ रविः सहजे च भवे मंदो मा राजयोगमिषीयते ३५ सहजे च यदा जीवो लाभस्थाने च चंद्रमाः स राजा लाभश्च ख्याविख्यातः कुलदीपकः ३६ शुभग्रहाः शुभः स्युस्ते भवंति यदि केंद्रगा तदा शुभानि कर्माणि करोत्येव च जातकः ३७ उच्चस्था नगताः सौम्याः केंद्रस्था न भवंति च ध्रुवं राज्यं भवेत्स्य तस्य वंशस्य च योगकः ३८ धने व्ययेत पाल ग्ने सप्तमे च यदा ग्रहाः छत्रयोग स्तदा ज्ञेयः स्ववंशे नायको भवेत् ३९ स्वनेत्र स्था

राम ३

॥४॥

मनः शरीराधिष्ठानात्तेषां तेरव नवृंहणं संशोधनसंशमना
हाराः सम्यक्प्रयुक्तानि स्रहतेतबोमजंति॥ क्रालितां पुन
र्हतमाहारोबलवर्णौजांसि च सम्यक् स्तुरसैश्चापतैः॥ रसाः
पुनर्द्रव्याश्रयाः द्रव्याणि पुनरोषधयः॥ ताद्विविधाः स्थाव
राजंगमाश्च तासां स्थावराश्चतुर्विधाः॥ वनस्पतयो वृक्षा
वीरुध ओषधय इति॥ तास्व पुष्पाः फलवंतो वनस्पतयः॥
पुष्पफलवंतो वृक्षाः॥ प्रतानवत्यस्तंबिन्यश्च वीरुधः॥ फ
लपाकनिष्ठा ओषधय इति॥ जंगमास्वपि चतुर्विधाः जरा
युजांडजस्वेदजोद्भिज्जाः॥ तत्र पशुमनुष्यव्यालादयो जरायुजाः
खगसर्पसरीसृपप्रभृतयोऽण्डजाः॥ कृमिकीटपिपीलिकाप्रभृत का
यः स्वेदजाः॥ इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः॥ तत्र स्थाव

गांम्न यदिहोपदेक्ष्यं॥ अस्मिन् शास्त्रे पंचमहाभूतशारीरस
मवायः पुरुष इत्युच्यते॥ तस्मिन् क्रियाधिष्ठानं कस्मात् लोक
स्य द्वैविध्यात॥ लोको हि द्विविधः॥ स्थावरो जंगमश्च द्वि वि
धात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात॥ पंचात्मको वा तत्र च
तुर्विधो भूतग्रामः स्वेदजांडजोद्भिज्जजरायुजसंज्ञः॥ तत्र पुरु
षः प्रधानं तस्योपकरणमन्यत॥ तस्मात् पुरुषोधिष्ठानं॥
तद्दुःखसंयोगात् व्याधिरित्युच्यते॥ ते चतुर्विधाः आगंतवः
शारीरा मानसाः स्वाभाविकाश्चेति तेषामागंतवोभिघातनि
मित्ताः॥ शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसं
निपातवैषम्यनिमित्ताः॥ मानसास्तु क्रोधशोकभयहर्षवि
षादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतयः॥ तत्र ते

त्तिकां गोमयं वापि न निशायां तथोदकं न गोमूत्रं प्रदोषे तु गृह्णीयाद्बुद्धिमान्नर इति यो
गियाज्ञवल्क्योपि गंधोदकांतं विधिवत्स्थापयेत्तत्पृथक्पृथक् ततो त्रिधा कृत्वा मृदं तां तु गो
मयं तद्द्विवत्तनः अधमोत्तममध्यानामंगानां क्षालनं ततः भागैः पृथक्पृथक्कुर्यात्क्ष
ालने मृदस्तं करमिति शौनकोपि प्रयतो मृदमादाय दूर्वापामार्गगोमयं एकदे
शे पृथक्कुर्यादिति वसिष्ठः मृदेकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि अधश्च
तिसृभिः कार्यं षड्भिः पादौ तथैव च प्रक्षाल्य सर्वकायं तु द्विराचम्य यथाविधीति
कायप्रक्षालनानंतरं भाविकर्तव्यमाह शौनकः गायत्र्यादित्याग्रबहिष्य ततो
देवा इति मृदमभिमंत्रयेत् ततो यत इंद्र स्वस्तिदा विशस्पति वि नत्रो विमृध इंद्र
मुत्रेनात इति मृदं प्रतिमंत्रं प्रतिदिशं क्षिपेत् पूर्वादिक्रमेण ततः संमार्जनं कुर्या
त्पूर्ववत्तु मंत्रवत् अश्वक्रांते इत्यादयो मृत्तिकामंत्रा यजुर्वेदप्रसिद्धाः पुनश्च
गोमयेनैवमग्रमग्रमिति ब्रुवन् अग्रमग्रं चरंतीनामोषधीनां रसं वने तासामृ
षभपत्नीनां पावनं कायशोधनं त्वं मे रोगांश्च शोकांश्च पापं च हर गोमयेति गोम

यमंत्रः कांडात्कांडादिति द्वाभ्यां अंगमंगमिति स्पृशेदिति अर्चयेदिति शेषः अपाघमप
किल्बिषमपकृत्यामपारपः अपामार्ग त्वमस्मदप दुःस्वप्न्यं सुव स्वाहेत्यपामार्गे
णांगमंगमुपस्पृशेत् अथ हिरण्यशृंगमयो देवी रक्षं तन्वि शुपस्थाय सुमित्रियान
इत्यपः स्पृष्ट्वा दुर्मित्रिया इति बहिः क्षिपेत् ततः इदमापः इत्युचं वा पः प्रविश्य मनसा
जपेत् तत्र गायत्रसामा मानिष्प्रविवाव्याहृतीर्जपेत् शिवेन मे जपित्वेदमापइत्यप
आप्लवेदिति वसिष्ठः येते शतमिति द्वाभ्यां तीर्थान्यावाहयेत् ध्यः कुरुक्षेत्रं गया
गंगां प्रभासनैमिषं तथेति शौनकः प्रपद्ये वरुणं देवमंभसां पतिमीश्वरं याचितं देहि
मे तीर्थं सर्वपापापनुत्तये तीर्थमावाहयिष्यामि सर्वाघविनिषूदनं सान्निध्यमस्मि
न्नित्तोये स्थीयतां मदनुग्रहात् रुद्रान्प्रपद्ये वरदान्सर्वानप्सुषदस्तथा आपः पुण्याः
पवित्राश्च प्रपद्ये वरुणं तथा शमयंत्वाशु मे पापं रक्षंतु च सदैव मामिति वसिष्ठः आपो
हि ष्ठेदमापश्च द्रुपदादिवेत्यपि तथा हिरण्यवर्णाः पावमानीरितीरिततः ततो कं वी
त्यचोंकारं निमज्ज्यान्तर्जले बुधः प्राणायामांश्च कुर्वीत गायत्रीं चाघमर्षणमिति वि

ष्वपि ततो मज्जमानस्त्रिरघमर्षणं तद्विष्णोः परमं पदमिति सावित्रीं वा युंजते मन इत्यनु
वाकं वा पुरुषसूक्तं वा स्नात आर्द्रवासा देवर्षिपितृतर्पणं तथा एवं कुर्यादिति मेधा
तिथिरपि ततोंभसि निमग्नस्त्रिः पठेदघमर्षणं प्रदद्यान्मूर्द्धनि तथा महाव्याहृ
तिभिर्जलमिति वसिष्ठः स्नात्वा मंत्रवद्वासो न्यहृत्वं शोधयेन्नदा अपवित्रीकृ
तेनैव कौपीनास्नावः वाधिरणा योनेन विधिना स्नाति यत्र तत्रांभसि द्विजः स तीर्थफ
लमाप्नोति तीर्थे द्विगुणं फलमिति तत्रानुकल्पमाह योगियाज्ञवल्क्यः यदा ह्यवि
स्तृतः प्रोक्तः स्नानस्य विधिरुत्तमः असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते स्ना
नमंतर्जले चैव मार्जनाचमने तथा जलाभिमंत्रणं चैव तीर्थस्य परिकल्पनं अघमर्ष
णसूक्तेन त्रिरावृत्तेन नित्यशः स्नानाचरणमित्येतदुपदिष्टं महात्मभिरिति इति म
ध्याह्नस्नानम् अथ नैमित्तिकस्नानं तत्र मनुः दिवाकीर्त्तिमुदक्यां च पतितं सूति
कां तथा शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति दिवाकीर्त्तिश्चांडालः अंगिराः
शवस्पर्शमयोदक्यां सूतिकां पतितं तथा स्पृष्ट्वा स्नानेन शुद्धिः स्यात्सचैलेन न संश

यद्इति गौतमोपि पतितचांडालसूतिकोदक्याशवस्पृष्टिं तत्स्पृष्टुपस्पर्शने सचैलउदकोपस्पर्श
नाच्छुध्येदिति पतितादिस्पृष्टिं समारभ्य तृतीयस्य सचैलं स्नानं न चतुर्थस्य तस्योदकोप
स्पर्शनाच्छुद्धिः तथा च मरीचिः उपस्पृशेच्चतुर्थस्तु तदूर्ध्वं प्रोक्षणं स्मृतं यत्तु संवर्तेन द्व
योरेव स्नानमुक्तं तत्स्पृष्टिं न स्पृशेद्युक्त्या स्नानं तस्य विधीयते ऊर्ध्वमाचमनं प्रोक्तं द्र
व्याणां प्रोक्षणं तथेति तदबुद्धिपूर्वस्पर्शविषयं तथा च संग्रहकारः अबुद्धिपूर्वक
स्पर्शे द्वयोः स्नानं विधीयते त्रयाणां बुद्धिपूर्वे तु तत्स्पृष्टिन्यायकल्पनेति कूर्मपु
राणे चांडालसूतिकशवैः संस्पृष्टं संस्पृशेद्यदि प्रमादात्तत आचम्य जपं कुर्या
त्समाहितः तत्स्पृष्टिस्पृष्टिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः आचामेत विशुद्ध्यर्थं प्रा
ह देवः पितामहः याज्ञवल्क्योपि उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशे
त् अब्लिंगानि जपेच्चैव गायत्रीं मनसा सकृदिति एतद्दंडाद्यंतरितस्पर्शवि
षयं अन्यथाद्ययोः स्नानमित्यनेन विरोधः प्रसज्येत वस्त्रांतरितसंस्पर्शने तु दं
डान्तरितन्यायप्राप्त्याभावात् प्रचेताः वस्त्रांतरितसंस्पर्शः साक्षात्स्पर्शोभिधीयते

सातान्स्पर्शेतु यत्प्रोक्तं तद्वत्स्नातः दिनेपि वेति चतुर्विंशतिमते स्नानस्य निमित्तांतरमुक्तं
बौद्धान्पाशुपतान्जैनान्लोकायतिककापिलान् विकर्मस्थान्द्विजान्स्पृष्ट्वा सचै
लो जलमाविशेत् कापालिकांस्तु संस्पृश्य प्राणायामोधिको मत इति चांडालादि
स्पर्शनिमित्तस्नाने विशेषमाह विष्णुः स्नानार्हो यो निमित्तेन कृत्वा तोयावगाहनं
आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेदिति योगियाज्ञवल्क्योपि नृसीमेवा
वगाहेत यदा स्यादशुचिर्नरः आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेदिति
गार्ग्योपि कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च नित्यं याहृच्छिकं चैव य
थारुचि समाचरेदिति इति नैमित्तिकस्नानप्रकरणम् अथ काम्यस्नानम्
पुलस्त्यः पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ अमावास्यां नदीस्नानं पुनात्या
सप्तमं कुलं चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ न प्रेतत्वमवाप्नोति गं
गायां च विशेषतः शिवलिंगसमीपे तु यत्तोयं पुरतः स्थितं शिवगंगेति विज्ञेयं त
त्र स्नात्वा दिवं व्रजेदिति यमोपि कार्त्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते माघ्यां

पा॰मा॰
२४

10

स्नातः प्रयागे नु मुच्यते सर्वकिल्बिषैः ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते दशजन्मा
घहां गंगा तेन पापहरा स्मृतेति विष्णुः सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी अ
रुणोदयवेलायां तस्यां स्नानं महाफलं पुनर्वसुबुधोपेता चैत्रमाससिताष्टमी स्रोतः
सु विधिवत्स्नात्वा वाजपेयफलं लभेदिति आदित्यपुराणे कार्त्तिके सकलं मासं नित्य
स्नायी जितेन्द्रियः जपन् हविष्यभुक् स्नातः सर्वपापैः प्रमुच्यते तुलामकरमेषेषु
प्रातः स्नायी सदा भवेत् हविष्यं ब्रह्मचर्यं च महापातकनाशनमिति मत्स्यपु
राणे आषाढादिचतुर्मासे प्रातः स्नायी भवेन्नरः विप्रेभ्यो भोजनं दत्वा कार्त्ति
क्यां गोप्रदो भवेत् स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतमिति मार्कण्डेयोपि
सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः तुष्यत्यामलके विष्णुरेकादश्यां
विशेषतः श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः सप्तमीं नवमीं चैव प
र्वकालं तु वर्जयेदिति विष्णुः बालात्मनरुणाद्युननरनारीनपंचकाः स्ना
त्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् माघमासेषासि स्नात्वा विष्णुलोके

राम
२४

सगच्छतीति इतिकाम्यस्नानम् अथमलापकर्षणस्नानं नरवामनपुराणे नाभ्यं
गमर्के न च भूमिपुत्रे सौरे च शुक्रे च कुजे च मांसं बुधे च योषित्सु विवर्जनीया शेषे
षु सर्वेषु सदैव कुर्यादिति ज्योतिःशास्त्रेपि संतापः कांतिरल्पायुः धनं निर्धनता न
पा अनारोग्यं सर्वकामा इत्यभ्यंगाद्भास्करादिषु इति मनुरपि पक्षादौ च रवौ षष्ठ्यां
रिक्तायां च तथा तिथौ तैलेनाभ्यज्यमानस्तु धनायुर्भ्यां विहीयत इति गर्गोपि
पंचदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे द्वादश्यां सप्तमीषष्ठ्यां तैलस्पर्शं विवर्ज
येत् बौधायनोपि अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः शिरोभ्यंगं वर्जयेत्तु
पर्वसंधौ तथैव च इति गर्गोपि न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा शास्त्र
तीभूतिमन्विच्छन्दशम्यामपि पंडित इति एवं सर्वास्वपि तिथिष्वभ्यंगस्य निषेधे
प्राप्ते तैलविशेषेणाभ्यनुज्ञानाति प्रचेताः सार्षपं गंधतैलं च यत्तैलं पुष्पवासि
तं अन्यद्रव्ययुतं तैलं न दुष्यति कदाचनेति यमोपि घृतं च सार्षपं तैलं यत्तैलं

पुष्पवासितं नदोषः पक्वतैलेषु स्नानाभ्यंगेषु नित्यशः ॥ इत्यभ्यंगस्नानम् ॥ क्रियांग
स्नानं तु नित्यस्नानवदनुष्ठेयं प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेदित्यादि क्रियां
गस्नानं द्रष्टव्यं तस्य क्रियांगत्वं पुराणोक्त्या स्वीकृतं धर्मक्रियां कर्तुमनाः पूर्वं स्ना
नं समाचरेत् क्रियांगं तत्समुद्दिष्टं स्नानं वेदपरैर्द्विजैरिति ॥ अथ क्रियास्नान
म् तत्र शंखः क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्वकं मृद्भिरद्भिश्च कर्तव्यं
शौचमादौ यथाविधि जले निमग्न उन्मज्य चोपस्पृश्य यथाविधि तीर्थस्या
वाहनं कुर्यात्तत्प्रवक्ष्याम्यतः परं प्रपद्ये वरुणं देवमंभसां पतिमूर्जितं याचितं दे
हि मे तीर्थं सर्वपापापनुत्तये तीर्थमावाहयिष्यामि सर्वाघविनिषूदनं सान्नि
ध्यमस्मिं स्त्रितोये स्थीयतां मदनुग्रहादिति यद्यपि स्नानेष्वस्वात्तकल्पाभ्यां
जलविशेषो विष्णुपुराणे निरूपितः नदीनदतडागेषु देवखातजलेषु च नित्यं
क्रियार्थं स्नायीत गिरिप्रस्रवणेषु च कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवीति



12

तस्मात्तादेयमुच्यते तीर्थं तोयं ततः पु
रं प[illegible] ×२

मार्कण्डेयोपि पुराणानां नरेंद्राणां महीरुहां येम हात्मनां स्नानं कूपतडागेषु देवता
नां समाचरेत् म्लेभिस्पृष्टकूतानासुरं पततः प्रस्रवणोदकं तेनापि सारसं पुण्यं ततो
गांगं तु सर्वतः इति मरीचिः म्लेभिस्पृष्टकूते वापि शीनमुखमुपापिवा गाङ्गपयःपु
नात्याकृपापमामरणांतिकं निषिद्धजलमाह व्यासः अन्त्यजेषु न स्नायात्तथैवा
संस्कृतेषु च ग्रामीयेष्वपि न स्नायात्तथैवाल्पजलेष्वपि व्यासोपि नद्यापश्चपरि
अष्टं नद्यापश्च विनिःसृतं गतप्रत्यागतं यच्च तत्तोयं परिवर्जयेत् शातातपोपि
अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं समाचरे
दिति प्रतिप्रसवमाह मनुः अलाभे देवखातानां सरसां सरितां तथा उद्धृत्य चतुरः
पिंडान्पारक्ये स्नानमाचरेत् उष्णोदकनिषेधं तिशंखः स्नातस्य वह्नितप्तेन तथै
व परवारिणा शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेदिति याज्ञवल्क्यः वृथो
ष्णोदकस्नानं वृथा जप्यमवैदिकं वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकमि

ति यत्तूष्णोदकविधानं आपत्स्ववसरे तत्र तास्नानं वह्निर्विशोधकः ततः सर्वेषु कालेषूष्णां
भः पावनं स्मृतमिति यद्विज्ञानेश्वरेऽपि आपः स्वभावतो मेध्याः किंपुनर्वह्निसंयुताः तेन
संतः प्रशंसंति स्नानमुष्णेन वारिणेति तदनंतरस्नानविषयं तथा च यमः आदित्यकि
रणैः पूतं पुनः पूतं च वह्निना आतुरस्नाने प्रशस्तमुष्णोदकमिति यत्तु तत्र
घायनं च समवसन्ननातुरस्यापि उष्णोदकस्नानमनिषिद्धमित्याह यमः नित्यं नैमित्ति
कं चैव क्रियांगं मलकर्षणं तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैरिति यदपि व
ह्यमनुनोक्तं मृते जन्मनि संक्रांतौ श्राद्धे जन्मदिने तथा अस्पृश्यस्पर्शने चैव न स्ना-
यादुष्णवारिणा संक्रांत्यां भानुवारे च सप्तम्यां राहुदर्शने आरोग्यपुत्रमित्रार्थी न स्नाया
दुष्णवारिणा पौर्णमास्यां तथा दर्शे यः स्नायादुष्णवारिणा स गोहत्याकृतं पापं
प्राप्नोतीह न संशय इति तत्रोक्तेषु मरणादिषु नोष्णोदकैः स्नायात् अपि तु परकी
येन कृतोदकेनैवेत्युक्तमिति न विरोधः उष्णोदकस्नाने विशेषमाह व्यासः शीता
स्वप्सु निषिच्योष्णा मंत्रसंभारसंभृताः गेहेऽपि शस्यते स्नानं तद्धीनमफलं वहिमि

ति औरं तु स्नानमुक्तमतस्त्रस्यमेव वक्ष्यति अथ संध्याविधिः तत्र संध्यास्वरूपं दत्तोद
र्शयति अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः सा तु संध्या समाख्याता मुनिभि
स्तत्त्वदर्शिभिरिति यद्यपि कालवाचकत्वेनात्र संध्याशब्दः प्रतीयते तथापि तस्मि
न्काल उपास्या देवता संध्याशब्देनोपलक्ष्यते तथा च देवताया उपासनमुपल
क्ष्यमूलवचनैकर्मपरत्वेन संध्याशब्दः प्रयुक्तः अथवा संधौ भवा निमा सं
ध्या अत एवाह व्यासः उपास्ते संधिवेलायां निशाया दिवसस्य वा तामेव संध्यां
तस्मात्प्रवदंति मनीषिण इति तां क्रियां विदधाति योगियाज्ञवल्क्यः संधौ सं
ध्यामुपासीत नास्तगे नोद्गते रवाविति सा च संध्या त्रिविधा तदुक्तमत्रिणा संध्या
त्रयं तु कर्तव्यं द्विजेनात्मविदा सदेति तत्र कालभेदेन देवतानां नामादिभेदमाह
व्यासः गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने सरस्वती च सायाह्ने सैव संध्या
त्रिषु स्मृता प्रतिग्रहादन्नदोषात्पातकादुपपातकात् गायत्री प्रोच्यते तेन गा
यंतं त्रायते यतः सवितृद्योतनात्सैव सावित्री परिकीर्तिता जगतः प्रसवित्री वा

पा॰मा॰
२६

वाग्रूपत्वात्सरस्वतीति वर्णभेदः स्वरान्तरेणाभिहितः गायत्री तु भवेद्रक्ता सावित्री शुक्लव र्णिका सरस्वती तथा कृष्णा उपास्या वर्णभेदतः गायत्री ब्रह्मरूपा तु सावित्री रुद्ररू पिणी सरस्वती विष्णुरूपा उपास्या रूपभेदत इति उपासनमभिध्यानं अनन्यचेतेति रीयब्राह्मणे. उद्यन्तमस्तं यान्तमादित्यमभिध्यायन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुते सावादित्यो ब्रह्मेति च मन्त्रब्राह्मणे तैत्तिरीयके वेदे अयमर्थः व्यक्त्याप्रकारेण प्राणायामादिकं कर्म कुर्वन्यथोक्तनामवर्णरूपोपेतं संध्याशब्दवाच्यमादित्यं ब्रह्मेति ध्यायन्नैहिकमामुष्मिकं च सकलं भद्रमश्नुते यत एवमुक्तध्यानेन शुद्धा न्तःकरणो ब्रह्मसाक्षात्कृत्य तेन स एव मपि ब्रह्मैव सन्नप्रसाद जीवत्वं प्राप्नोति यथो क्तज्ञानेनैतद्ज्ञानापगमे ब्रह्मैव प्राप्नोतीति व्याख्यातेन देवाभिध्यानमाह नमि लां प्रतिपद्येत गायत्रीं ब्रह्मरूपिणीमिह सोऽहमस्मीत्युपासीत विधिना येन केनचि दिति तत्र प्रातःसंध्यायाः कालपरिमाणमाह दक्षः रात्र्यन्तयामनाडी द्वे संध्या दिः काल उच्यते दर्शनाद्रविरेखाया स्तदन्तो मुनिभिः स्मृतेति ग्रासंगवं प्रातः सं

१६

मा॰म॰
२६

ध्यायामोक्तः कालः आपृदेशावसाने च सायंसंध्याकालः तदाह वृहन्मनुः न प्रा-
तर्न प्रदोषस्रसंध्याकालोऽतिवर्तते अल्पकालोऽन्तकल्पश्च सर्वेष्विन्कर्मस्वि
स्मृत इति कर्मप्रदीपे संध्योपास्तिप्रकारो दर्शितः प्राक्कूलेषु ततः स्थित्वा द-
र्भेषु सुसमाहितः प्राणायामत्रयं कृत्वा ध्यायेत्संध्यामिति श्रुतिरिति याज्ञवल्क्यो-
पि प्राणानायम्य संप्रोक्ष्य ऋचेनाऽब्दैवतेन जपन्निति वृहस्पतिः बद्धासनं नियम्या-
सनस्मृत्वा वर्षादिकं तथा सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत् प्राणा-
यामलक्षणं मनुराह सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह त्रिः पठेदाय-
तप्राणः प्राणायामः स उच्यते याज्ञवल्क्यः गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपू-
र्विकां प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव
च प्रत्योंकारसमायुक्तास्तथा तत्सवितुः पदं ओमापोज्योतिरित्येतच्छिरः पश्चा-
त्प्रयोजयेत् त्रिरावर्तनयोगात्तु प्राणायामस्तु शब्दितः इति स च प्राणायामः पू-
रककुंभकरेचकभेदेन त्रिविधो ज्ञेयः तथा च योगियाज्ञवल्क्यः पूरकः कुंभ-

कोरेच्य: प्राणायामस्त्रिलक्षणः नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते कुंभको
निश्चलश्वासो निःस्यमानस्तु रेचकः मार्जनमाह व्यासः आपो हि ष्ठा ऋचाभिस्तु कुर्यान्मा
र्जनं तु कुशोदकैः प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे विप्रुषोऽष्टौ क्षिपेदूर्ध्व
मधो यस्य क्षयाय जिन्व रजस्तमोमोहजाताञ्जाग्रत्स्वप्नसुषुप्तिजान् वाङ्मनः
कायजान्दोषान्नवैतान्नवभिर्दहेदिति प्रजापतिरपि स्नानांते मार्जनं कुर्यात्स
दा नैवासमाहितः ऊर्ध्वं क्षिपेत्तथा कुर्याच्छिरश्चानामतः मीदृशामिति हस्तेना
पि मार्जनार्चनबलिकर्मभोजनानि देवतीर्थेन कुर्यात् नखमार्जनेन धारया च
तो कार्यं तथा च वृद्धाः धाराच्युतेन तोयेन संध्योपास्ति विगर्हिता पितरो न
प्रशंसंति न प्रशंसन्ति देवताः कथं तर्हि मार्जनमिति तत्राह स एव नद्यां ती
र्थे हृदे वापि भाजने मृन्मये पि वा औदुंबरे वसौवर्णे राजते ताम्रसंभवे कृत्वा
तु वामहस्ते वा संध्योपास्तिं समाचरेदिति कृत्वोदकमिति शेषः मृन्मयादि
पात्रसद्भावे तु वामहस्तस्य प्रतिषेधः वामहस्तेन जलं कृत्वा ये तु संध्यामुपास

119

हस्रेत्योमिति सहोवाचकत्येवदेवायाज्ञवल्क्येति त्रयस्त्रिंशदित्योमितिहोवाच
कत्येवदेवायाज्ञवल्क्येति षडित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयइत्यो
मितिहोवाचकत्येवदेवतायाज्ञवल्क्येति द्वावित्योमितिहोवाचकत्येवदेवतायाज्ञव
ल्क्येति अध्यर्द्धइति होवाचकत्येवदेवतायाज्ञवल्क्येक इत्योमितिहोवाचकतमेते
त्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेतिस होवाचमहिमानएवैषामेतेत्रयस्त्रिंश
=थमेतेतत्- द्देवा इति कतमेतेत्रयस्त्रिंशदिति अष्टौवसवएकादशरुद्राद्वादशादित्यास्तए
कत्रिंशदिन्द्रश्चैवप्रजापतिश्चत्रयस्त्रिंशाविति कतमेवसव इति अग्निश्चपृथि
वीचवायुश्चान्तरिक्षंचादित्यश्चद्यौश्चचंद्रमाश्चनक्षत्राणिचैतेवसवएतेषु हीदंसर्वं
वसुहितमेतेहिसर्ववासयन्तेतद्यदिसर्ववासयन्तेतस्माद्वसवइतिकतमेरुद्रा
इति दशेमेपुरुषेप्राणाआत्मैकादशस्तेयदास्मान्मर्त्याच्छरीरादुत्क्रामन्तिअथ
रोदयंति तद्यद्रोदयंतितस्माद्रुद्रा इति कतमआदित्या इतिद्वादशवैमासाः संवत्स

पा॰मा॰
६९

रश्चैत आदित्या एते हीदं सर्वमाददाना यंति ते यदिदं सर्वमाददाना यंति तस्मादादि
त्या इति कतम इंद्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेंद्रो यज्ञः प्रजापतिरिति
कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति कतमे ष
डित्यग्निश्च पृथिवी च वायुश्चांतरिक्षं चादित्यश्च द्यौश्चैते षडेते हीदं सर्वं ष
डिति कतमे ते त्रयो देवा इति इम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ
द्वौ देवाविति अन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति तदाहु
र्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदं सर्वमध्यार्ध्नोत्तेना
ध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षत इति अस्याः श्रु
तेरयमर्थः उपासनानामेव देवानां संख्याविस्तारेण शाकल्येन पृ
ष्टो याज्ञवल्क्यो विजिगीषुकथायाः प्रवृत्तत्वात्सर्वमुक्त्वा मोहायमपि विदग्धप्रश्
नांतरं प्रतिपेदे निविष्टो वैश्वदेवनामके शास्त्रविशेषे पठितानां संख्यावा

राम
६९

ने सायंसंध्यावपत्नीनेयाञ्जसुरास्त्रैस्तु तर्पिताः इति स्मरणात् मृण्मयाद्यभावे तु कु
त्वा तु वामहस्तेन दत्तेन तु वामहस्तविधानात् एवमुक्तविधिना मार्जयित्वा सूर्य
श्चेत्यपः पिबेत् तत्र बौधायनः अथातः संध्योपासनविधिं व्याख्यास्यामः ती
र्थं गत्वाऽप्रयतोऽभिषिक्तः प्रक्षालितपाणिपादोऽप उपस्पृश्याचम्याग्निश्च मा मन्युश्चेति सा
यमपः पीत्वा सूर्यश्च मा मन्युश्चेति प्रातः सावित्र्या लवं सुमत्याश्च लिंगाभिर्वारुणी
भिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य पूतो
भवतीति भरद्वाजः सायमग्निश्च मेत्युक्त्वा प्रातः सूर्यश्चेत्यपः पिबेत् आपः पुनंतु
मध्याह्ने ततश्चाचमनं चरेदिति कात्यायनोपि शिरसो मार्जनं कुर्यात्कुशैः सोद
कबिंदुभिः प्रणवो भूर्भुवः स्वः सा गायत्री च तृतीयका अब्दैवतस्त्र्यृचश्चैव चतुर्थमि
ति मार्जनमिति मार्जनानंतरं प्रजापतिः जलपूर्णं तथा हस्तं नासिकाग्रे समर्पये
त् ऋतं चेति पठित्वा तु तज्जलं तु क्षितौ क्षिपेत् ततः सूर्यायार्घं दद्यात् तथा च व्या
सः कराभ्यां तोयमादाय गायत्र्या चाभिमंत्रितं आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वं सं

पा॰मा॰
९८

क्षिपेदिति कात्यायनोपि सावित्र्याभिमंत्रितमुदकं पुष्पमिश्रमंजलिना क्षिपेदिति अर्घदाने मंत्रांतरमुक्तं विष्णुना करभ्यामंजलिं कृत्वाकरस्पर्शसमाहितः उदुत्यमिति मंत्रेण तत्तोयं च क्षिपेत्कुर्वीत ततः प्रदक्षिणं कृत्वोदकं स्पृशेत् तदुक्तं पुराणे सायं मंत्रवदाचम्य प्रोक्ष्य सूर्यस्य चांजलिं दत्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुध्यतीति श्रुतिरपि यत्प्रदक्षिणं प्रक्रमेति तेन पाप्मानमवधून्वंतीति कूर्मपुराणे अथोपतिष्ठेदादित्यमुदयंतं समाहितः मंत्रैस्तु विविधैः सौरैः ऋग्यजुःसामसंभवैरिति उपस्थानं तु स्वशाखोक्तमंत्रैः कार्यं उपस्थानं स्वकैर्मंत्रैरादित्यस्य तु कारयेत् इति वसिष्ठस्मरणात् उपस्थानं तु कूर्मपुराणे उक्तो त्त्यादिना प्रपंचितं प्राक्कूलेष्वित्यादिनोपस्थानपर्यंतं प्रातःसंध्यायामुपवर्णितम् तदितरयोः संध्ययोः समानं तत्र मध्यान्हसंध्याया विशेषो नारायणेनाभिहितः आपः पुनंतु मंत्रेण आपो हि ष्ठेति मार्जनम् प्रक्षिप्य चांजलिं सम्यग् उदुत्यं चित्रमित्यपि तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि रात्रं जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः गायत्रीं तु यथाशक्ति उपस्थाय दिवाकरमिति कालविशेषवशत्वेन दर्शितः प्रातःसंध्यां सनक्षत्रां मध्यमां स्नानकर्मणि सादित्यां पश्चिमां संध्यामुपासीत यथाविधीति

राम
९८

कृतत्वं तिजनिशाने धातो दीर्घो निपातनात् चोः कुरिति गः स्वसेच घा इति कः षत्व णत्वे तीक्ष्णं तीक्ष्णं सामुद्रलवणे विषलोहाजिम्
ष्वकेक्लीवं यवाग्रके पुंसि तिग्मात्मत्या जिनोऽश्विषु तिमेदिनी श्लिष आलिङ्गने श्लिषेरिकारस्यात्वं निपातनात् षढोरिति कः
षत्वं श्लक्ष्णं मना देर्युः युप्रत्ययमाह मन ज्ञाने निपातनान्ने युघोरित्यनादेशः मन्युः मन्युर्दैन्ये क्रतौ क्रुधि दसु उपक्षये दस्युः दस्यु
श्चौरे रिपौ पुंसीति मेदिनी जनी प्रादुर्भावे जन्युः जन्युः स्यान्नप्राण्यग्नि ... इति मेदिनी मङ्कुः ... कुप्रत्ययमाह ...
णः मङ्कुः प्राणित्याजे मत्युः मत्युर्नीम रणे यमे इति मेदिनी सर्तेर्यप् प्रत्ययमाह सृ गतौ सरगतौ सरयुः नदी पादेः पः यप्रत्ययमाह
पा रक्षणे पातिर ... त्यात्मानमिति पापं ... प्रावणे नीपः पुरोहितः विप्रः ... पानीयं न्यादेः ... प्रत्ययमाह ...
पणे नीपः नीपः कदम्बे बन्धूक नीलाशोके द्रुमेपि चेति मेदिनी ... वाहुलकाद्दीर्घः स्तूपः स्तूपो व्येजनस्तूपः ... इति मेदिनी
कुशब्दे वाहुलकाद्दीर्घः कूवति मण्डूकोऽस्मिन्निति कूपः शिल्पादूपः पक् प्रत्ययाता निपात्यन्ते शील समाधौ ... निपातनात् शि
ल्पं कौशलं शष्प हिंसायां निपातनात् ष शष्पं वालतृणेपि च पुंसि स्यात् प्रतिभा हीने इति मेदिनी शष्पं वालतृणं घासः इत्यमरः
वाष्पं वीलोडने धस्य षत्वं निपातनात् वाष्पः वाष्पा नेत्रजलोष्मणोरिति विश्वः वाष्प ... इति च रुशब्दे दीर्घत्वं
निपातनात् रूपं रूपं स्वभावे सौन्दर्ये इति विश्वः ... हिंसायां निपातनाद्रुः ... इति दीर्घः ... स्फोटनं ... सूर्पम् ... इत्यमरः
स्तनादेश्चैत्ताविन्तुः ... प्रत्ययमाह स्तन गदेव शब्दे चुरादिर्ण्यन्ते गुणो ... पादेशः स्तनयित्नुः पुमान् वारिधरे विस्तनिते
पि चेति मेदिनी स्तनयित्नुः पयोवाहते ... मृत्यु रोगयोरिति विश्वः गदयित्नुः पुमान् काममे जल्याके कार्मुके चेति विश्वः दमाम्बा

॥ गणेशाय नमः ॥ श्रीसनत्कुमार उवाच ॥ गयायात्रां प्रवक्षामि प्रस्यु नारद मुक्ति
दां ॥ निःकृतिस्त्विस्कर्त्तृणां ब्रह्मणा गीयते पुरा ॥१॥ सूत उवाच ॥ इति श्रुत्वा ततो वाक्यं
नारदो मुनिसत्तमः ॥ सनत्कुमारं पप्रच्छ प्रणम्य विधिपूर्वकं ॥२॥ श्रीनारद उवाच ॥
सनत्कुमार मे ब्रूहि तीर्थानामुत्तमोत्तमं ॥ तारकं सर्वभूतानां शृण्वतां पठितां
सदा ॥३॥ श्रीसनत्कुमार उवाच ॥ वक्ष्ये तीर्थं परं पुण्यं श्राद्धादौ सर्वतारकं ॥
गया तीर्थं ऋषिश्रेष्ठ तीर्थेभ्योप्यधिकं शृणु ॥४॥ गयासुरस्तपस्तेपे ब्रह्मणा त
त्र जगाम वै ॥ छलेन पातयित्वा वै शिला धर्मेण धारयत ॥५॥ तत्र ब्रह्मा
करोद्यागं स्थापयित्वा गदाधरं ॥ फल्गुतीर्थस्वरूपेण निश्चलार्थमहर्निशं ॥६॥
कृतयज्ञो ददौ ब्रह्मा ब्राह्मणेभ्यो गृहादिकं ॥ श्वेतकल्पे तु वाराहे गयायां सर्व
संगमे ॥७॥ गया नाम्ना गयास्थानं देवं ब्रह्मर्षिकांक्षितं ॥ कांक्षंति पितरः पु

राम० १